सर्गः ७२—( ३ ) तिटी—सीतयोर्मिलया । ( ६ ) प—वरयेम सुते । ( ७ ) राशि—...रथस्येते । ( ८ ) प—संबन्धो ह्यनु...इक्ष्वाको । ( १० ) प, गोटी, राशि—येषां नो । गोटी—शापयथः । झ—पूर्वार्द्धं नास्ति । ( ११ ) राशि—भद्रं ते । ( १२ ) क्ष, तिटी—चतस्रणामिति दीर्घत्वमार्षम् । ( १५ ) प, गोटी, राशि—भवतोः सदा...आसातां । राशि—आस्येतां । ( १९ ) प—कर्माणि सर्वाणि विधास्य । गोटी, राशि—गमिष्यामि । गोटी—विधास्यामीति । ( २२ ) प, गोटी, राशि—शतसहस्राणि ब्राम्हणे । तिटी—एकैकश इत्यार्षम् । ( २३ ) घ, प, गोटी, राशी—सुवर्णशृंगाः । ( २५ ) प, न, र—स सुतेः । प, गोटी—नैर्ऋतस्तु नृपति ।

सर्गः—७३ ( १ ) प—शूरो । ( ८ ) प, गोटी—कर्मवित् । च—पूर्वार्द्धं नास्ति । ( १० ) प, गोटी, राशि—तु पुरतः कृत्वा । उत्तरार्द्धे—पितुः समीपमाश्रित्य तस्थौ भ्रातृभिरावृत्तः । छ—पितुः । इदमर्धं नास्ति । ( ११ ) गोटी—वरश्रेष्ठे । ( १२ ) प—सर्वार्थाः प्रभवन्ति हि । तिटी—उत्तमं वैवाह्यम् । आर्षः ष्यञ् । ( १५ ) प—बन्हेर्यथाचिर्षः । ( १६ ) प—सज्जोऽहं । उत्तरार्धस्यस्थाने—राशि, ड—अविघ्नं कुरुतां राजा किमर्थमवलम्बते । त—क्रियतां राजन् किम... ते । ( २१ ) घ, तिटी—अच्छिद्र कुम्भैः । प, गोटी, राशि—छिद्रकुम्भैश्च । ( २२ ) प, गोटी, राशि—रर्घ्याभिपूरितैः । ( २३ ) प, र—संस्कृतैः । ( २४ ) प—धाय वेद्यां तु । वसिष्ठो भगवानृषिः । गोटी—ऋषिसत्तम । ( ३२ ) प—अब्रवीज्जनकेश्वरः । ( ३३ ) प, गोटी—श्रुतकीर्त्या । ( ३५ ) श, राशि—पूर्वार्द्धं नास्ति । ( ३६ ) गोटी, राशि—रघूत्तमाः । च—उत्तरार्धं नास्ति । प—सभार्या रघुसत्तमाः । उत्तरार्धानंतरम—काकुत्स्थैश्च गृहीतेषु ललितेषु च पाणिषु । इत्यधिकम् । ( ३८ ) राशि—तदद्भुतमिवाभवत् । ( ४० ) प, गोटी, राशि—औपकार्यां । राशि—सदारा ।

सर्गः ७४—( १ ) प—उत्तरार्द्धानंतरम्—आशाभिः पूरयित्वा च कुमारांश्च । स राघवान् । ( २ ) श, राशि—अपृष्छावाथ । गोटी—अपृष्ट्वाथ । प—आपृच्छ्याथ । उत्तरार्धानंतरम्—प, राशि—गच्छंन्तं तं तु राजानमन्वथ छत्राधिपः । इत्यधिकम् । च—उत्तरार्धं नास्ति । ( ३ ) राशि—बहूनि पृथिवीपतिः । ( ४ ) प, गोटी, राशि—क्षौमकोट्य...। ( ५ ) प—कन्यापिता । ( ६ ) प, गोटी, राशि—ददौ परमसंहृष्टः । ( ८ ) प, न—सबलानुगः । गोटी, राशि—तं नरव्याघ्रं । ( ९ ) प, गोटी—घोराः स्म । गोटी, राशि—...रन्ति ततस्ततः । ( १४ ) गोटी, राशि—पृथिवीम् । गोटी—द्रुमाञ्छुभान् । प, गोटि—सर्वा न प्रैचमुदिंशः । ( १६ ) गोटी, राशि—सशङ्का इव । ( १७ ) प—...दग्न्यं तं राजराजविमर्दिनम् । ( १९ ) र—चासज्ज्य । प, श, गोटी, राशि—चासाद्य...शरमुख्यं...हरम् । ( २० ) प—प्रमुखाः सर्वे । ( २१ ) प—क्षत्त्रं । ( २२ ) प—सर्वक्षत्त्रवधं । ( २३ ) गोटी, राशि, प—रामेति वचो मधुरमब्रुवन् ।

सर्गः ७५—( १ ) गोटी—दाशरथे राम । ( २ ) प, गोटी—धनुष्प्रस्त्वया । प, घ, गोटी, राशि—...गृह्यापरम् । ( ३ ) तिटी—जामदग्न्यं जमदग्नेः स्वपितुरागतम् । अत्रार्थे ष्यञ् आर्षः । ( ४ ) प, गोटी, राशि—धनुषोऽस्य प्रपूरणे । गोटी—श्लाघ्यस्य राघव । छ—उत्तरार्धानंतरम्—भीतो यदि धनुस्त्यक्त्वा निर्जितोऽस्मीति वा वद । अन्यथा द्वन्द्वयुद्धं मे दाता त्वं वै न संशयः । इत्यधिकम् । ( ६ ) प, गोटी, राशि—ब्राह्मणत्वं महायशाः । ( ७ ) गो, रा—निक्षिप्तवानसि । ( ८ ) प—काश्यपाय । ( १० ) प—ब्रुवदत्यैव तद्वाक्यं । ( ११ ) प, गोटी—लोकाभिविश्रुते । राशि—दृढे बहुबले । ( १२ ) गोटी, राशि—अतिसृष्टं । ( १३ ) गोटी, च—इदमर्धं नास्ति । ( १४ ) गोटी—धनुः परमभास्वरम् । छ—उत्तरार्धं नास्ति । ( १६ ) प—तयोः सत्त्वपरीक्षया । ( २० ) ज, ड, क्ष—उत्तरार्धानन्तरम्—पूजयित्वा ततो विष्णुमामन्त्र्य च पिनाकिनम् । ब्रह्मेन्द्रादीन् पुरस्कृत्य नाकपृष्ठं ययुस्तदा ।

( २२ ) प–सन्न्यास। ( २५ ) राशि–क्षत्त्रमुत्पाटयन्न। ( २६ ) प, गोटी, राशि–काश्यपाय।... स्यान्ते तदा। ( २७ ) गोटी, राशि–श्रुतवान धनुषो। प–उत्तरार्धं नास्ति। ड, त–उत्तरार्धस्य स्थाने–स्थितोऽस्मि तस्मिंस्तप्यन् वै सुसुखं सुरसेविते। अद्य तूत्तमवीर्येण त्वया राम महाबल। इत्यधिकम्। ( २८ ) प, गोटी, राशि–तदिदं। न–तदेवं। ( २९ ) घ–शक्नोषि।

सर्गः ७६—( १ ) प–गोटी, राशि–श्रुत्वा तज्जाम...। ( ४ ) प, क्ष–भार्गवस्य शरासनं। राशि–प्रतिसंग्रह्य। तिटी–इत्युक्त्वा। अत्राप्यग्रे वक्ष्यति–" निर्वीर्यो जामदग्न्योऽसौ "। ( ५ ) प, गोटी, राशि–ऽब्रवीद्वचः। ( ७ ) घ, गोटी–समार्जितान्। प, गोटी–इमां पादगतिम्। प, गोटी–ते हनिष्यामि यदिच्छसि। ( ११ ) प–जामदग्न्योऽथ। ( १२ ) प, गोटी, राशि–तेजोऽभिर्हत। ( १३ ) गोटी–यथा। ( १४ ) प–तदा प्रतिज्ञा...कृताभूः...हि। तिटी–निशां रात्रिं न वसे। तदर्थः। ( १५ ) प, गोटी, राशि–तदिमां त्वं गतिं राम। ( १७ ) प, गोटी, राशि–सुरोत्तमम्। ( १९ ) राशि–चेयं राम। ( २० ) राशि–गमिष्येऽहं। ( २३ ) राशि–प्रशशंसुमुदान्विता। च–उत्तरार्धं नास्ति। ( २४ ) प, गोटी–जामदग्न्यः प्रशस्य च...। प्रदक्षिणं कृत्वा। तिटी–प्रशस्य ह। इति पाठान्तरम्।

सर्गः ७७—( १ ) प, गोटी–हस्ते ससायकम्। ( २ ) गोटी–विव्हलम् दृष्ट्वा। ( ३ ) ड, क्ष, ज्ञ–उत्तरार्धानन्तरम्–संदिशस्व महाराज सेनां त्वच्छासने स्थिताम्। शासनं काङ्क्षते सेना चातकालिर्जलं यथा। इत्यधिकम्। ( ४ ) गोटी–तद्वच श्रुत्वा। प, गोटी, राशि–मूर्ध्नि चाघ्राय। ( ७ ) गोटी, राशि–यद्यपि राजपथाम्। राशि–टीकायां विरुद्धमिव दृश्यतेः। प, गोटी–मंगलवादिभिः। र–पथारम्यां। ( ९ ) गोटी–सदृशं पुनः।...स्वजनो। ( १० ) राशि–कौशल्या। ( ११ ) प, गोटी–नृपपत्नयः। ( १२ ) प–मङ्गलालापनैश्चैव। त–मंगलालेपनैश्चैव। ( १३ ) प, गोटी, राशि–भर्तृभिर्सहिता रहः। अस्यानन्तरम्–कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि। इत्यधिकम्। ड–पूर्वार्द्धानंतरम्–स्वं स्वं गृहमथासाद्य कुबेरभवनोपमम्। गोभिर्धनैश्च धान्यैश्च तर्पयित्वा द्विजोत्तमान्। च, ज्ञ, त–उत्तरार्धं नास्ति। ( १४ ) तिटी–कृताज्ञाः कृतास्त्राश्च। प–उत्तरार्धानन्तरम्–काले काले तु नीतिज्ञास्तोषयन्तो गुरुं गुणैः। इत्यधिकम्। ( १८ ) राशि–पितरं वीरं। ( १९ ) गोटी–पूर्वार्द्धं नास्ति। ( २१ ) प, गोटी, राशि–चकार रामो धर्मात्मा। ( २३ ) गोटी–नैगमास्तदा। ( २५ ) गोटी–तद्गतस्तस्य नित्यं हृदि। प–तद्गतमना नित्यं। ( २६ ) राशि–पितृकृता इव। गोटी, प–...भूयोऽभ्यवर्धत। ( २७ ) गोटी–अन्तर्जातमपि। ( २९ ) प, गोटी, राशि–...सुतोऽभिरामया। प, गोटी, राशि–शुशुभेऽतिकामया। घ–विष्णुरिवामरेश्वरः ॥ २९ ॥ अस्यानन्तरम्–इत्यार्षे ... वाल्मीकीये ... चतुर्विंशत्सहस्रिकायां ... सर्गः ॥ ७७ ॥ अतः परमयोध्याकांडं तस्यायमाद्यः श्लोकः ॥ गच्छता मातुलकुलं भरतेन तदानघः। शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १ ॥ तिलकटीका–" तत्र द्वादशवर्षाणि राघवः सह सीतया। रमयामास धर्मात्मा नारायण इव श्रिया। " इति पाद्मउक्तम्। एकोनषोडशवर्षस्य विश्वामित्रेण नयनात्पञ्चदशवर्षसमाप्तौ विवाह इति बोध्यम् ॥ ॥ २९ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये बालकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥ बालकाण्डेतु सर्गाणां कथिता सप्तसप्ततिः। श्लोकानां द्वे सहस्रं च पंचाशच्चशतद्वयं ॥ १ ॥ अयं कंठकुठारस्ते कुरु राम यथोचितं। गवाग्न्यजन्मनां तात न शूरा राघवो वयं ॥ २ ॥ बाले बालेन कल्पेन कृत्वा संरक्षणं कृतोः। सीता अंके धृता येन स रामः पातु नः सदा ॥ ३ ॥ बालकांड व्याख्या समाप्ता ॥ श्री संवत् ॥ १८ ॥ ४० ॥ श्रावण शुक्लपक्षस्य सप्तमी भौमवासरेण लिखितं शंभू गौडज्ञातीय ॥ ग्रंथसंख्या ॥ ५०५० ॥ ॥ मूळ ॥ २२५० ॥ टीका ॥ २८०० ॥

# द्वितीयं परिशिष्टम् ।

## " श्री " मातृकाया भूमिका ।

अयं बालकाण्डात्मकः प्रथमः खण्डः " क " मातृकानुसारेण मुद्रितः । तदनन्तरं च बहवो मातृका उपलभ्य तद्गतानि पाठान्तराणि मुद्रणार्थं दत्तानि । अथैकदाहं यदृच्छया भाण्डारकर-प्राच्य-संशोधन-मन्दिरं गतः । तत्रस्था ग्रन्थाधिकृता जगद्विख्याताः संशोधका अपि कीर्तिविमुखाः, श्रीरामायणसंशोधनसमितेरादितः प्रभृत्युपदेष्टारः श्री परशुराम कृष्ण गोडे, एम्. ए., एम्. टी. ए. ( इटली ), महाशया मत्परमसुहृदः । ते च संशोधनफलरूपं " एम्. टी. ए. " उपाधिं, " इटली " देशस्थ " अकॅडमी ऑफ् टेम्प्लर्स " इतिख्यातविद्वत्परिषदोऽधिगतवन्तः । " संशोधनमन्दिरस्थाः श्रीवाल्मीकिरामायणमातृकाः पाठान्तरलेखनार्थं मे दीयंताम् " इति मया विज्ञप्तैस्तैःकतिपया मातृका दत्ताः । तासुच द्वे बालकाण्डमातृके उपलब्धे । तत्पाठान्तरलेखनानन्तरं दशसङ्ख्याका अयोध्याकाण्डमातृका यथाक्रमं दृष्टाः । चरममातृकायाः प्रथमे पत्रे तु बालकाण्डस्य प्रथमः श्लोकः " तपःस्वाध्यायनिरतः " एवमादिर्दृष्टः । ततश्च यावन्मया सकलैव मातृका निरीक्षिता, तावत्तन्नायोध्याकाण्डं किन्तु बालकाण्डमित्यवगतम् । तदक्षरवटिकानुसारेण च सा पञ्चशतसंवत्सरेभ्यः प्राचीना भवितुमर्हतीत्यनुमितम् । एतन्मातृकावेष्टने पुनः " No. 123/of 1884–87 रामायण- अयोध्याकाण्ड... " एवंरूपाण्यक्षराणि सन्तीत्यवधेयम्

एतां मातृकां दृष्ट्वातीव विस्मितो नितरां हृष्टश्चाहं यदा तां विद्वद्भ्यो मन्मित्रेभ्यः श्री गोडे, डॉ. रामचंद्र नारायण दाण्डेकर एम्. ए., पी. एच्. डी. ( जर्मनी ), परशुराम लक्ष्मण वेद्य एम्. ए., डी. लिट् (पारीस) महाशयेभ्योऽदर्शयं, तदा तेऽपि नितरां हृष्टाः । अस्याश्च अनेककाण्डात्मिकाया मातृकाया वेष्टनगतेन " Samwat 1512 " एवंरूपेण लेखेन जनितकौतुकोऽहं यावत्तस्याश्चरमपत्रमपश्यं, तावत्तत्रापि " संवत् १५१२ कार्तिकमासे कृष्णपक्षे अष्टम्यां तिथौ सोमदिने " इत्येवमक्षराणि दृष्टवान् तेभ्यश्च दर्शितवानस्मि । तेन सर्वेपिऽ मुदिताः ।

अनन्तरं मया एल्. डी. स्वामी कन्नु पिलाईमहाशयस्य Indian Ephemeris ग्रन्थस्य पञ्चमे भागे १५१२ सं. द्वादशाधिकपञ्चदशशततमस्य संवत्सरस्य कार्तिकमासस्य कृष्णाष्टम्यवलोकिता । तत्रत्यः सन्दर्भो एवं वर्तते । " कार्तिक बहुल अष्टमी Monday नक्षत्र १० ( मघा ), युवा संवत्सर, 5 November 1455 " एतन्मया मन्मित्रत्रयाय दर्शितं, तेषां सम्मतं चाभवत् । एवं चैषा मातृका पञ्चशतवर्षेभ्यः प्राग्लिखितेति गम्यते । वर्षचतुष्टयमात्रं न्यूनंच वर्तते ।

यदा मया श्रीरामायणस्य संशोधितावृत्तिप्रकाशनं निर्धारितं, तदाप्रभृति मया श्रीरामचन्द्रो बहुवारं प्रार्थितो, यद्भगवत्प्रसादेन श्रीरामायणस्य मातृका पञ्चशतवर्षेभ्यः प्राचीना ममोपलब्धा भवतु।सैषा मत्प्रार्थना तद्दिनेऽवन्ध्या संवृत्ता।

एतावत्कालपर्यन्तमुपलब्धा मातृकाः सङ्केतार्थं " क " " ख " इत्याद्यक्षरैः सञ्ज्ञिताः । पुस्तकं च " क " मातृकानुसारेण मुद्रितम् । तस्य सप्तसप्ततिसर्गमुद्रणानन्तरं, अन्यमातृकागतपाठान्तराणि मुद्रणार्थं दत्तानि । ततश्चेयं मातृकाकस्मात्सहसैवोपलब्धा श्रीरामप्रसादेन । अत इयं " श्री " इति सञ्ज्ञिता ।

अस्यामपि मातृकायामितरास्विव, अल्पान्येव पाठान्तराणि भवेयुरिति भातम् । किन्तु यथा यथा सा पुरतोऽवलोकिता, तथा तथा तस्यां " क " मातृकागतप्रतिश्लोकं पाठान्तराणि दृष्टानि । केचिच्छ्लोका अपि "क" मातृकाया मूलतो भिन्ना उपलब्धाः । सर्गविपर्ययोऽप्युपलभ्यते । " क " मातृकास्थाः केचिच्छ्लोकाः " श्री "

मातृकायां अन्यस्मिन्नेव सर्गे दृश्यंते। एतेषां च सर्वत्र विकीर्णत्वात्तेषां स्थलनिर्देशः प्रायोऽसम्भव एव। एतत्पाठाश्च "क" मातृकापाठापेक्षया साधीयांसो, युक्ततराः, कथासूत्रसंलग्ना, निष्प्रमादा, भ्रमोत्पादनरहिताश्च। अतस्ते, 'राक्षसो मूलत आर्यजनानामुत यवनानाम्, '–' सीतोत्पत्तिः, ' ' सगरकथा, ' ' गङ्गावतरणम्, ' इत्यादि-विवाद्यविषयेषु निर्णायका भवितुमर्हन्ति। वर्णनानि चात्रत्यानि ऐतिह्यमनुसृत्यैव दृश्यन्ते, न त्वद्भुतरसः। क्षेपकाण्यपि प्रायो न दृश्यन्त एव। तस्मादियं मातृका वाल्मीकीयपाठनेदीयसी स्यादिति प्रतिभाति। अत्र विषये मया सहसम्पादका अन्ये च बहवो विद्वांसः पृष्टाः। तेषां चोपदेशानुसारेण समग्रैवेयं "श्री" मातृका काण्डशः परिशिष्टरूपेण मुद्रणीयेति निर्णीतम्। तदनु "श्री" मातृकागतं बालकाण्डमिदं द्वितीयपरिशिष्टे मुद्रितं, इतिहाससंशोधकेभ्यः पुरातत्त्ववेत्तृभ्यश्च, अग्रिमकाण्डप्रकाशनाय चातीवोपयुक्तं भवेदित्याशासे।

अस्याः सामान्यस्वरूपं निम्नलिखितं वर्तते। :–(१) सर्वत्र पृष्ठमात्रा वर्तन्ते। (२) 'अ, इ, ई, उ, ऊ, ऋ, ओ, क, च, झ, ञ, ढ, ण, द, ध, फ, भ, य, ल, स, क्ष, ज्ञ, कृ, कु, दु, पू, ह्र, द्द, त्व, द्ध, त्तु, ध्या, तृ' एवमादिसर्ववर्णाः संयुक्ताश्च शिरोरेषारहिताः। तेषां वर्णानां कतिपयानामङ्कानामप्याकृतयः पञ्चशतात्सप्तशतवर्षेभ्यः प्राक्तनताम्रपटशिलालेखगताक्षराकृतिसदृशा एव। काश्चिदाकृतयश्च अशोकस्य शिलाशासनगताकृतिसदृशाः। ॐ कारोऽपि प्राचीन एव, यथोक्तो ज्ञानेश्वरविरचितायां भावार्थदीपिकायाम्। "अकार चरणयुगल। उकार उदर विशाल। मकार महामंडल। मस्तकाकारें॥" (अ. १-१०) (३) मातृकातीव शुद्धा वर्तते, व्याकरणविषया अन्यविषया वा प्रमादा अल्पीयांस एव। (४) पत्रं घनं विद्यते किन्तु अतिप्राचीनत्वाज्जीर्णं भङ्गुरं च संवृत्तम्। कतिपयस्थलानां सच्छिद्रत्वात्तत्रत्याः शब्दा लुप्ताः। कतिचित्स्थानेषु पुनरस्माभिरन्यमातृकागता शब्दास्तत्र-तत्र मुद्रिताः। (५) मातृका १०॥। पादोनैकादशाङ्गुलिपरिमितत्वेनायता, ४॥। पादोनपञ्चाङ्गुलिपरिमितत्वेन वितता। प्रतिपत्रपृष्ठे दक्षिणसमासे पत्राङ्को निर्दिष्टोऽस्ति। ६८ अष्टषष्ट्यङ्कः प्रमादात्पत्रद्वये लिखितः। किन्तु यदा लेखकेन तज्ज्ञातं तदा तेन तत्स्थाने "पत्र ६८ प्रथम" "६८ पत्र २" एवंरूपं संस्करणं कृतम्। (६) लेखनशैली चेदृशा यत्–श्लोकानन्तरमेका चरणरेषा, तत्पुरतः श्लोकाङ्कः, तदग्रे तु न चरणरेषा, किन्तु श्लोकान्तरप्रारम्भः। (७) प्रतिपत्रं प्रायश एकादशपङ्क्तयः। पत्रस्य भुजचतुष्टये अङ्गुलिद्वयात्मकः समासो वर्तते। (८) लेखकः सर्वत्र 'सर्गः' 'स्वर्गः' इत्यादिस्थाने 'सर्ग्रः' 'स्वर्ग्रः' इत्यादिशब्दानलिखत्। (९) प्रतिसर्गसमाप्तौ च सर्वत्र "बालकाण्डे" इत्यस्य स्थाने "अयोध्याकाण्डे" एवं लिखितत्वाद्वेष्टनगताङ्ग्ललेखेऽपि तथैवालिखितं। अत एव मया एतावत्कालपर्यन्तं इयं मातृका न निरीक्षिता। केवलं २६, २७, ३०, ३७, ५२ एतत्सर्गसमाप्तौ 'अयोध्याकाण्डस्य'–स्थाने "बालचरितं (त्रं)" लिखितम्। अनेन "पुरा बालकाण्डस्य नाम 'बालचरित्र–काण्डं आसीत्" इत्यनुमीयते। पश्चाच्च कदाचित् 'चरित' शब्दो लुप्तोऽभवत्। कतिपयसर्गसमाप्तौ 'इत्यार्षे श्रीरामायणे' एतदपि नास्ति। किन्तु प्रतिसर्गसमाप्तौ सर्गकथानुसारेण प्रत्येकमनुगुणं कथानाम 'वस्तूत्पादनं,' 'राज्यवर्णनं,'–' दशरथप्रमोदनं' इत्यादिकं वर्तते। (१०) पाठान्तराणि, विवरणादीनि च समासे लिखितानि। यस्मिन्स्थले पाठान्तराणि, विवरणादीनि वा विद्यन्ते, तत्स्थलं उपरितः रेखाद्वयाङ्कितं वर्तते। अत्र च लेखनीभेदो दृश्यते। (११) पत्रस्य वामदक्षिणभागयोर्द्वे द्वे समासरेखे स्तः। समासरेखा श्लोकाङ्काः सर्गसमाप्तिलेखाश्च गैरिकरञ्जिताः। (१२) यदा लेखकः कतिचिदक्षराणि श्लोका वा शोधयितुमैच्छत्तदा तेन शिरोरेषाया उपरि ऊर्ध्वरेखा दत्ताः, न तु पीतकस्तत्र लिप्तः। (१३) ग्रन्थारम्भे प्रथममेव श्लोकत्रयं मूलतो भिन्नम्। 'तपःस्वाध्यायनिरतः' एवमादिः श्लोकोऽत्र चतुर्थो दृश्यते। (१४) 'शबरी' शब्दः 'सबरी' इत्येवं लिख्यते। अद्यापि जातिरियं

'सवर' इत्यनया संज्ञयाभिधीयत इति मया तद्देशे संशोधनार्थं भ्रमता ज्ञातम्। इत्थमेवाद्यापि तत्तज्जातीनां स्थलानां नामानि तत्कालीनस्वरूपेणैव वर्तमानानि मातृकायामस्यां समुपलभ्यन्ते। (१५) द्वादशे सर्गे त्रिंशश्लोकतो एकचत्वारिंशच्छ्लोकपर्यन्तं सर्वे श्लोका नूतनाः। लेखकस्त्रयोदशसर्गमपि द्वादशत्वेनैवाङ्कयति। तथैव पंचाशत्तमोऽपि सर्गाङ्को द्विवारं लिखितः। एवं पुरतः सर्वत्र सर्गाङ्क अंकद्वयेन न्यून एव वर्तते। द्वादशत्रयोदशसर्गौ ऋष्यशृङ्गकथा-विस्तारात्मकौ अन्यमातृकास्वविद्यमानौ प्रक्षिप्ताविव प्रतिभातः। (१६) रामादिबन्धुचतुष्टयजन्मवर्णने राशि-नक्षत्रादिकं नैव दृश्यते। एतद्राशिवादनिर्णये उपयुक्तं भवेत्। (१७) चतुर्दशसर्गे विंशः श्लोको नूतनः, एकविंशः, "क" मातृकास्थसप्तसप्ततितम-सर्गस्थचतुर्विंशश्लोकेन, "श्री" मातृकास्थद्विपञ्चाशत्तमसर्गस्थाष्टा-त्रिंशत्तमश्लोकेन चाभिन्नः, द्वाविंशः "क" गत ७७-२८ श्लोकेन, "श्री" गत ५२-४२ श्लोकेन चानन्यः, त्रयोविंशोऽपि "क" ७७-२६ श्लोकेन, "श्री" ५२-४० श्लोकेन चाभिन्नः, चतुर्विंशस्तु नूतन एव, त्रिंशोऽपि नूतनः एकत्रिंशद्वात्रिंशत्त्रयस्त्रिंशाः क्रमशः "क" ७७-१४, २५,२९ श्लोकैः, "श्री" ५२-३७, ३९, ४३ श्लोकैश्चाभिन्नाः। इयमुपपत्तिरत्र प्रदर्श्यते। लेखनकाले आदर्शपुस्तकस्यान्तिमं पत्रं वायुना उत्पतितं लेखकस्य पुरस्तात्पतितं स्यात्। तस्मात्तेनानवहितेन कदाचिदेतेऽन्तिमसर्गगताः श्लोकास्तत्रैव लिखिता भवेयुः। पश्चाच्च तेन यथाक्रमं लिखितं, परमेतेषां शोधनं तु विस्मृतम्। एतद्वर्जयित्वा "श्री" मातृकायामीदृशः प्रमादो न कुत्राप्युपलभ्यते। (१८) "श्री" मातृका ४४-१२६ तमे श्लोके, ब्रह्मा विश्वामित्रं "महर्षि" वदति, न तु "ब्रह्मर्षि" यथा "क" मातृकायाम्। यतः स अद्यापि तदर्थं न परीक्षित आसीत्। (१९) सीताजन्मकथाप्यपूर्वैव।

अस्यां मातृकायां कालनिर्देशात्पश्चात्तनानां अन्तिमपङ्क्तीनामत्यस्फुटत्वान्न ज्ञायते लेखकस्य नाम, निवासस्थानं वा। तथापि तस्य लेखनशैलीमनुसृत्यात्र कानिचिदनुमानानि स्थाप्यन्ते। स "सूत्रभाष्यं" उल्लिखति (९-५), तस्मात्स्फुटं अवगम्यते यत्स पाणिनिपतञ्जलिभ्यामर्वाचीनः। स गङ्गामादरेणैव सर्वदो-ल्लिखति, गङ्गावतरणकथा च विस्तरेण प्रदर्शयति, तस्य कान्यकुब्जदेशनगरब्राह्मणवर्णनपि अहेतुकमादरपूर्णं च। तस्मादिदमनुमीयते यत्स गङ्गातीरस्थकान्यकुब्जीयो ब्राह्मणोऽभवत्। स ऋष्यशृङ्गगोत्रो विभाण्डकगोत्रो वाभूत्, यतस्तेनर्ष्यशृङ्गकथाप्रस्तावे सर्गद्वयं क्षेपकमेव दत्तम्। स बहुषु स्थलेषु "य" स्य स्थाने "जः," (२७-७ प्रथमं 'यज्ञे' लिखित्वा पश्चात् 'ज' ज्ञे इति संशोधयति, ४८ तमे सर्गे 'ययाति' शब्दस्थाने 'जयाति' इति लिखति), "ख" स्य स्थाने "षः," (४१. २९ खाडव = षाडव, ४४. १६७ पाखंडी = पाषण्डी, ३०.१० शिखर = शिषर, ४४.३९ मूर्ख = मूर्ष,) लिखति। तथा च "शैल" स्थले "शील," "श्रमणा" स्थले "श्रवणा" "स" स्य स्थाने "शः," "स्थ" स्य स्थाने "स्छः," "स्छ" स्य स्थाने "छः", सर्वत्र "धर्म" शब्दस्य स्थाने "धर्म्म", "अब्रवीत्" इत्यस्य स्थाने "अब्रूवीत" इत्यपि लिखति। एतेन प्रतिभाति, यत्स शुक्लयजुर्वेद्यपि स्यादिति। (२०) स० ४८-३० तमश्लोकस्थसमासस्यविवरणे "दीपिका"... टीकामुल्लिखति। तस्मात्स तस्या अप्यर्वाचीनो भवेत्।

अस्यां मातृकायां द्विपञ्चाशत् (वस्तुतस्तु ५४) सर्गाः सन्ति, "क" मातृकायां पुनः सर्गाः सप्तसप्ततिसङ्ख्याकाः। केषुचित्स्थलेषु अत्र "क" मातृकागतं सर्गद्वयं सर्गत्रयं वा एकसर्गत्वेनैव विद्यते। प्रथम सप्तसर्गपर्यन्तं प्रति सर्गस्य श्लोकसंख्या एकीकृत्य प्रदत्ता। सप्तमसर्गान्ते च सा ३४३ वर्तते। ततः पश्चात्सा न दीयते। "क" मातृकायां बाल ण्डस्य श्लोकसङ्ख्या २२९२ वर्तते, "श्री" मातृकायां च २२२४ वर्तते।

"श्री" मातृका प्रायो यथायथमेव मुद्रिता । मुद्रणकाले तु तच्छ्लोकाः "क" सञ्ज्ञकमुद्रित-पुस्तकस्थश्लोकैः सह परस्परं तुलिताः । यत्र यत्र ते समानास्तत्र तत्र "श्री" पुस्तके "......" ईदृशानि चिह्नानि दत्त्वाम्रेडितं परिहृतम् । तस्मात्पाठकैः "श्री" पुस्तकवाचनवेलायां सततं "क" पुस्तकमनुसन्धेयम् । एवं च "श्री" पुस्तकं सम्पूर्णं भवेदित्यवधेयम् ।

एत एव एतन्मातृगता विशेषाः । अतश्चास्या महत्त्वानुरूपमियं मातृका "श्री" इत्यन्वर्थाभिधानेन सञ्ज्ञिता ।

मातृकादानेन च श्री परशुराम कृष्ण गोडे महाशयैः अहं, सम्पादकमण्डलं, रामायणसमितिः, एतद्देशस्थाः परदेशस्थाश्च रामायणसंशोधकाः, जिज्ञासवश्च सर्वेऽपि नितरामुपकृताः । तदर्थं चाहं सम्पादकमण्डलेन, समित्या च सह तेषां ऋणभारमनिशं वहामि ।

भूमिकालेखनानन्तरं सा अस्मत्सहसम्पादकेभ्यः परमसुहृद्भ्यः पण्डितवरेण्येभ्यः खुपेरकरोपाह्वश्रीबाला-चार्येभ्यः, तथा श्री आ. बा. जोशीमहाशयेभ्यश्च दर्शिता । तेषामनुमत्या च मुद्रणार्थं दत्ता ।

भूमिकामुद्रणानन्तरं च "श्री" ति संकेतितं हस्तलिखितं यथावन्मुद्रितम् ।

"ल" मातृकागताः पाठभेदाः "श" मातृकागतपाठसदृशा एव दृष्टास्तस्मात्
पाठभेदसंग्रहे ते नैवास्माभिर्दत्ताः ।

**चान्दोरकरोपाह्व आबाशर्मा ।**

---

। ~~०॥ ॐ नमो विघ्नवल्ली विध्वंसनायं ॥ जयति भृगुवंशतिलकः प्रथमकविर्द्विजवरः स वाल्मीकिः मृदुललितपदनिबद्धं कृतमिदं रामायणं येन ॥ १ ॥ जयति रघुवंशतिलकः कौसल्याहृदयनंदनो रामः । दशवदन-निधनकारी दाशरथिः पुंडरीकाक्षः ॥ २ ॥ (अ) त्रैव धर्म्मविधिरत्र पतिव्रतानां सौभ्रात्रमत्र निखिला गुरुभक्तिरत्र । वाल्मीकिना कविवरप्रवरेण गीते रामायणे वदत केऽत्र गुणा न संति॥ ३ ॥ तपःस्वाध्यायनिरतस्तपस्वी वाग्विदांवरः । नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवः ॥ ४ ॥ कोप्यस्ति प्रथितो लोके स्वैर्गुणैर्गुणवत्तरः । गुणज्ञः कश्च धर्म्मज्ञः कः सत्यः को दृढव्रतः ॥ ५ ॥ चारित्रेण...को हितः । वीर्यवांश्च कृतज्ञश्च मतिमान् कोऽनसूयकः ॥ ६ ॥ जितक्रोधो महान् कश्च कश्चाति गु(ण)वत्तरः । एतैर्वक्तुं समर्थोसि...नरं ॥ ७ ॥ क उदारः समर्थश्च त्रैलोकस्यापि रक्षणे । कः प्रजानुग्रहरतः को निधिर्गुणसंपदां ॥ ८ ॥ समग्रा रूपिणी लक्ष्मीः कमेकं संश्रिता नरं । अनिलानलसूर्येंदुशक्रोपेंद्रसमश्च कः ॥ ९ ॥ यदि श्रोतुं मया शक्यमत्र कौतूहलं मम । कथय त्वं समर्थोसि ज्ञातुमेवंविधं नरं ॥१०॥ श्रुत्वा चैव त्रिकालज्ञो...वचः । इक्ष्वाकुवंशप्रभवो राम एभिर्गुणैर्युतः ॥ ११ ॥ धर्म्मात्मा च महात्मा च द्युतिमान् धृतिमान् क्षमी । बुद्धिमान...निबर्हणः ॥ १२ ॥ विपुलांसो...हनुः । महेश्वासो महातेजा गूढ...रिंदमः ॥ १३ ॥ आजानु...सुशिराः बलवान् सिंहविक्रमः । समासम...वान् ॥ १४ ॥ विशालाक्षः पीनवक्षा लक्ष्मी...लक्षणः । धर्म्मज्ञः...श्च जितक्रोधो जितेंद्रियः ॥ १५ ॥ मनस्वी ज्ञान...शुचिर्वीर्यसमन्वितः । रक्षिता सर्वलोकस्य... रक्षिता ॥ १६ ॥ सर्ववेदांगविच्चैव सर्व शास्त्रविशारदः । सर्वशास्त्रार्थतत्त्वज्ञो नीतिमान् प्रति...वान् ॥ १७ ॥

सर्वे...दीनात्मा बहुश्रुतः । सर्वदानुगतः...सिंधुभिः ॥ १८ ॥ स सत्यः स समः शूरः स चैकः प्रियदर्शनः । कालाग्नि...समः ॥ १९ ॥ धनदस्य सम...सत्येष्वनुपमः सदा । तमेवंविधसंपन्नं...क्रमं ॥ २० ॥ ज्येष्ठं श्रेष्ठ...युक्तं राजा दशरथःसुतं । यौवराज्येन संयोक्तुमिच्छन्नु स मही...॥ २१ ॥ तस्याभिषेकसमयं दृष्ट्वा कैकेयसंभवा । पूर्वं दत्तवराभार्या वर...याचत ॥ २२ ॥ विवा...षेचनं । स...संयतः ॥ २३ ॥ विवास...सुतं राजा दश...प्रियं । जगाम स वने वीरः...यन् ॥ २४ ॥ पितु...प्रियकाम्यया । तं ..ह ॥ २५ ॥ सदा विनयसंपन्नः सौभ्रात्रमनुदर्शयन् । सर्वलक्षण...नारीणा...वधूः ॥ २६ ॥ सीता...रामं निशाकरमिव प्रभा । पौरै...गता...च ॥ २७ ॥ ते वनेन...बहूदकाः । चित्र...प्राप्ताः ..नात् ॥ २८ ॥ रम्य...त्रयः । वास्तुपूजां च तत्रैव चक्रुस्ते सुसमाहिताः ॥ २९ ॥ देव...न्सुखं । चित्र...शोकार्दितो नृपः ॥ ३० ॥ राजा...स्वर्गमगमद्विलपन्सुतं । गते...न्भरते...द्विजैः ॥ ३१ ॥ प्रनोद्यस्त तु तदा भरतं भरताग्रजः । स कामयत चाप्येवं गृहीत्वा मम पादुके ॥ ३२ ॥ नंदिग्रामे...कांक्षया । रामोऽपि पुनराकांक्षन्नागरस्य जनस्य वै ॥ ३३ ॥ तत्रागमन...ह । विराधं...ददर्श ह ॥ ३४ ॥ सुतीक्ष्णं...तथा । अगस्त्य...हैन्द्रं धनुस्तदा ॥ ३५ ॥ लब्धा च परमप्रीतस्तूणा चाक्षय सायकैः । वसत...सह ॥ ३६ ॥ ऋषयोऽभ्यागताः...रक्षसां । तेन तत्र सहभ्रात्रा जन...निवासिनी ॥ ३७ ॥ विरूपिता सूर्पणखा...रूपिणी । ततः...वाक्यान्मर्दिताः सर्वे राक्षसाः ॥ ३८ ॥ खरं च दूषणं चैव रक्षं त्रिशरसं तथा । जघान च रणे रामो घोरांस्तान् सर्वे राक्षसान् ॥ ३९ ॥ तेषामनुबलं सर्वे सहस्राणि चतुर्दश । ततो...काममूर्छितः ॥ ४० ॥ सहायं...राक्षसं । न विरोधो...क्षमो रामेण तेत्विति ॥ ४१ ॥ अनादृत्य...कालनोदितः । जगाम...मारीचो रामाश्रमपदंततः ॥ ४२ ॥ तेन माया कृता दूरमपकृष्टे नृपात्मजे । रावणोऽतरमासाद्य सीतां सुरसुतोपमां ॥ ४३ ॥ जहार...जटायुषं । गृध्रं...हृतां भार्यां च मैथिलीं ॥ ४४ ॥ राघवः...विललाप स दुःखितः । तत...जटायुषं ॥ ४५ ॥ मार्गमाणो वने वीरो राक्षसं तौ ददर्शतुः । कबंधं रुजदंनृणां विकृतं...दर्शिनं ॥ ४६ ॥ तं हत्वा राक्षसं घोरं श्रियाः पुत्रं दनुं तदा । ततो पश्यन्महाबाहुर्दिवं गच्छंतमेव हि ॥ ४७ ॥ दनोस्तु बचनादेव सुग्रीवं शरणं गतः । स चास्य कथयामास श्रमणां शबरी ततः ॥ ४८ ॥ श्रमणां...मध्यगच्छत्स राघवाः । सोऽभ्य...न्महाबाहुः...सूदनः ॥ ४९ ॥ सबर्या...थात्मजः । पंपा...ह ॥ ५० ॥ हनुमन्वचना...गतः । सुग्रीवेण च तत्वज्ञः पृष्टो रामो महाबलः ॥ ५१ ॥ चकार...रामोऽपि सुग्रीवेण महात्मना । ततो...कथितं प्रति ॥ ५२ ॥ रामे निवेदितं...च । प्रतिज्ञातं...प्रति ॥ ५३ ॥ सुग्रीवः शंकितो नित्यं वालिवीर्ये च राघवे । राघवः...कायमुत्तं ॥ ५४ ॥ पादांगुष्ठेन...योजनं । सप्ततालान्विनिर्भिद्य शरेण नतपर्वणा ॥ ५५ ॥ गिरिं...चैव गमयामास प्रत्ययं । ततः...स्तेन कर्म्मणा विश्वसत्कपिः ॥ ५६ ॥ किष्किंध्यां...स्वगृहांस्तदा । निनादेन च सुग्रीवः पूरयामास रोदसीं ॥ ५७ ॥ तेन नादेन...कपीश्वरः । अनुमान्य ततस्तारां...गतः ॥ ५८ ॥ निजघान च रामोपि शरेणैकेन बालिनं । ततः...माहवे ॥ ५९ ॥ सुग्रीव...तद्राज्यं...यन् । स च...वानरर्षभः ॥ ६० ॥ दिशः...मास मार्गध्वं जन...जां । ततो...हनुमत्कपिः ॥ ६१ ॥ शत...बे मकरालयं । तत्र...पालितां ॥ ६२ ॥ ददर्श...गतां । निवेद...प्रवृत्तिं संनिवेद्य च ॥ ६३ ॥ समासाद्य...मास नैरृतान् । पंच...सुतानपि ॥ ६४ ॥ शूरमक्षं निहित्वा च ग्रहण...मत् । मर्षयन् बंधनं वीरो धर्षणां तां यदृच्छया ॥ ६५ ॥ ततो...लंकां दृष्ट्वा सीतां च जानकीं । देव्या चाप्यायितः क्षिप्रं पुन...कपिः ॥ ६६ ॥ सोऽभिगम्य...प्रदक्षिणं । निवेदयत सुप्राज्ञो दृष्टा...तत्त्वतः ॥ ६७ ॥ ततः...महोदधेः । समुद्रं...संनिभैः ॥ ६८ ॥ दर्शयामास...समुद्रो राघवस्य तु । समुद्र...मकारयत् ॥ ६९ ॥ स वै गत्वा...हत्वा तं राक्षसेश्वरं । अभिषिच्य स बिभीषणं ॥ ७० ॥ कर्मणा तेन महता देवा इंद्र पुरोगमाः ।

सदेवऋषिगणाः स्तुष्टा...त्मनः ॥ ७१ ॥ बभौ परम संतुष्टः...दैवतैः। कृतकृत्य...विज्वरः समपद्यते ॥ ७२ ॥ देवेभ्यः स वरं प्राप्य रामः सीतामवाप्य च। पुष्पकं स समारुह्य...राममुपागतः ॥ ७३ ॥ नंदि...सहराघवः। रामः...वान् ॥ ७४ ॥ हृष्टः...सधार्मिकः। निरा...निरोग...वर्जितः ॥ ७५ ॥ न पुत्र...केचित्पश्यंति स्म नराः क्वचित्। नार्यः...नित्यं पतिशुश्रूषणेरताः ॥ ७६ ॥ न वातजं.. किंचित् नाप्सु मज्जंति प्राणिनः। न चाग्निजं...किंचिद्यथा कृतयुगं तथा ॥ ७७ ॥ अश्वमेध...सुवर्णकैः। गवां शतसहस्राणि बहूनि स हि दास्यति ॥ ७८ ॥ बहून् वंश्याश्च राज्ञोऽसौ राघवस्तु करिष्यति। चातुर्वर्ण्ये...स्मिन् स्वधर्मे स्थापयिष्यति ॥ ७९ ॥ दश...च। रामो...लोकं गमिष्यति ॥ ८० ॥ इदं पवित्रमाख्यानं पुण्यं चैव सुखावहं। यः...प्रमुच्यते ॥ ८१ ॥ एत...नरः। सपुत्र...सगणः स्वर्गलोके महीयते ॥ ८२ ॥ पठन् द्विजो वृषभत्वमीयवान् क्षत्रान्वयो भूमि...त्। वणिग्...पुण्य...त् शृण्वं हि शूद्रोऽपि...यात् ॥ ८३ ॥ इत्यार्षे श्रीरामायणे अयोध्याकांडे नारदवाक्यं नाम सर्गः ॥ छ ॥

नारदस्य...विशारदः। पूजया...शिष्यैर्महात्मभिः ॥ १ ॥ यथावत्...महर्षि...स्वतः। आपृच्छ्य-म्याभ्यनुज्ञातो जगाम त्रिदिशालयं ॥ २ ॥ स...लोकाय नारदे। जगाम जान्हव्याः नविदूरतः ॥ ३ ॥ तत्र तीरं...स्तदा। उवाच शिष्यं पार्श्वस्थं दृष्ट्वा...कर्दमं ॥ ४ ॥ नकर्दम...मय। पुण्यं चैव प्रसन्नं च सज्जनानां यथा मनः ॥ ५ ॥ इदं तीर्थसमं सौम्यं सुजलं सूक्ष्मवालुकं। न्यस्यतां कलशस्तावत्...॥ ६ ॥ वल्कलं त्वमिहादाय शीघ्रं मे ह्याश्रमान्पुनः। यथा कालात्ययो न स्यात्तथा साधु विधीयतां ॥ ७ ॥ इदमेवाव...मुत्तमं। स गुरोर्वचना-च्छीघ्रमागम्य पुनराश्रमं ॥ ८ ॥ आनीय वल्कलं चासौ गुरवे प्रत्यवेदयत्। स शिष्य...दाय स्नात्वा चैव महामुनिः ॥ ९ ॥ तर्पयित्वा च विधिवत् तोयेन पितृदेवताः। विचचार निरीक्षन्स सर्वतो...वनं ॥ १० ॥ ततः स तमसातीरे विचरंतमभीतवत्। ददर्श क्रौंचयोस्तत्र मिथुनं चारुदर्शनं ॥ ११ ॥ तस्मात्तु...निश्चयः। जघान तीरनिलयं निषादो दृष्टुः सन्निधौ ॥ १२ ॥ हतं रुधिरदिग्धांगं चेष्टमानं महीतले। ददर्शाल्पस्थितिप्राणमुन्नर्दंत यथा बलं ॥ १३ ॥ भार्या तं...दृष्ट्वा विललापार्त्तया गिरा। तथा विलपमानां तां क्रौंचीं बाष्पाहतां भुवि ॥ १४ ॥ यथा च तं द्विजं तेन निषादेन नि...तं। दृष्ट्वा शिष्य सहायस्य मुनेः कारुण्यमागतं ॥ १५ ॥ ततः...द्विजः। निशम्य...ब्रवीत् ॥ १६ ॥ मा निषाद...समाः। यत्क्रौंच...मोहितं ॥ १७ ॥ तस्यैवं...बीक्षितुं। शोकार्त्तौ चैव शकुनौ...भाषितं मया ॥ १८ ॥ मुहूर्तमिव तत् ध्यात्वा वाक्यं तत्प्रविमृश्य च। उवाच शिष्यं भगवान् भरद्वाजमिदं वचः ॥ १९ ॥ पादे बद्धसमश्चैव तंत्री...तः। शोका...नान्यथा ॥ २० ॥ शिष्यांथ.. त्तमं। प्रति...संहृष्टस्तस्य प्रीतोभवद्गुरुः ॥ २१ ॥ सोऽभि...न्यथाक्रमं। तमेव...न्नर्थमाश्रमायन्यवर्त्तत ॥ २२ ॥ तमन्वियाद्विनीतात्मा भरद्वाजो महामुनिः। कलशं...तो मुनिसत्तमः ॥ २३ ॥ संप्रवेश्या...वित्। उपविश्यासने तूर्णी ध्यानमेवान्व-पद्यत ॥ २४ ॥ आजगामाश्रमपदे...पितामहः। स्वयं स्वयंभूर्भगवानासने परमार्चिते ॥ २५ ॥ ऋषिणाभ्यर्चितः सम्यगासां चक्रे पितामहः। वाल्मीकयेर्षासनं स्वंदिदेशानंतरं ततः ॥ २६ ॥ उपविष्टे ततस्तस्मिन्...महः। तद्गते...माश्रितः ॥ २७ ॥ शोचन्निव मुहुः क्रौंचीं तमेवार्थं पुनः पुनः। जगादांतर्गतमना...यणः ॥ २८ ॥ कष्टं कृतं पाप्मना वै निषादेनाल्पबुद्धिना। यत्ता...रुतरं जघ्ने क्रौंचमकारणात् ॥ २९ ॥ तमुवाच...प्रहस्य...वं। श्लोक एष त्वया बद्धस्तस्य वाक्यस्य शोचनात् ॥ ३० ॥ स्वच्छंदाचैव ते...। रामस्य...सत्तम ॥ ३१ ॥ धर्म्मा...गुणवतो...धीमतः। वृत्त प्रसिद्धं रामस्य यथा ..श्रुतं ॥ ३२ ॥ रहस्यं...धीमतः। रामस्य ससहायस्य...सर्वशः ॥ ३३ ॥ वैदेह्या...रहः। सदारेण सराष्ट्रेण राज्ञा दशरथेन यत् ॥ ३४ ॥ आक्षितं भाषितं चैव कृतं यद्वाप्य-

नुष्ठितं । तथाप्य वितथं सर्वं...ष्यति ।। ३५ ।। धर्मकामार्थसंबद्धं बहु चित्रार्थविस्तरं । समुद्रमिव रत्नाढ्यं लोकश्रुतिरसायनं ।। ३६ ।। न ते...भविष्यति । कुरु...दिव्यां...रमां ।। ३७ ।। यावत्...तले । तावद्रा...ष्यति ।। ३८ ।। यावच्च...विचरिष्यति । तावदूर्ध्वंगतिश्चैव मम लोके...सि ।। ३९ ।। इत्यु...धीयतः । ततः...वाल्मीकिर्मुनिर्विस्मयमागतः ।। ४० ।। तस्य...श्लोकं हितं तदा । मुहु...विस्मिताः ।। ४१ ।। समा...र्षिणा । सो...मागतः ।। ४२ ।। ततो बुद्धिरभूत्तस्य वाल्मीकेर्भा...नः । कृत्स्नं...काव्यमेष वै प्रकरोम्यहं ।। ४३ ।। जगौ स भगवन्कृत्स्नमेतद्वीजं निशम्य तु । कृत्स्नं रामायणं श्लोकैरीदृशैः...ष्यहं ।। ४४ ।। उदार...नोहरैस्ततः स रामस्य...मान् । समा...श्लोकपदैर्य...दारधीरिति ।। ४५ ।। ( समासांतर्गत—"...शोकवृत्तात्...चिंत्य । " ) इत्यार्षे श्रीरामायणे अयोध्याकांडे वस्तूत्पादनं नाम सर्गः ।। छ ।। २ ।। १२८ ।।

श्रुत्वा वाक्यं पूर्वबीजं देवर्षे नारदान्मुनिः । लोकादन्विष्य भूयश्च विस्तरं चरितव्रतः ।। १ ।। उप...जलिः । प्राची...दर्भेषु काव्यस्यान्वेषणेरतः ।। २ ।। तपोबलेन चान्विष्य चरितं भूरितेजसः । गुणा रामस्य रामस्य राज्ञो दशरथस्य च ।। ३ ।। सभार्यस्य सराष्ट्रस्य सांतःपुरजनस्य च । भरतस्य यथा वृत्तं शत्रुघ्नस्य च धीमतः ।। ४ ।। वसिष्ठस्य सुमंत्रस्य वामदेवस्य चैव हि । विश्वामित्रस्य देवर्षेर्जनकस्य च धीमतः ।। ५ ।। रक्षसां वानराणां च तथा वीर्यविचेष्टितं । सीतासहायेन वचो कथितं वसता वने ।। ६ ।। सत्यसंधेन रामेण लक्ष्मणेन च धीमता । त्रैलोक्यदर्शनं भगवान् तपोयोगबलेन च ।। ७ ।। तत्सर्वं तत्त्वतोन्विष्य रामवृत्तांतज्ञानवान् । ददर्श तत्र प्रत्यक्षं पाणौ चामलकं यथा ।। ८ ।। दृष्ट्वा चानंतरं चक्रे रामस्य चरितं महत् । धर्मकामार्थसंयुक्तं पुण्यश्रवणकीर्त्तनं ।। ९ ।। श्रुतिरत्नाकराकीर्णं काव्यसागरमुत्तमं । प्राप्तराज्यस्य रामस्य चरितं भूरितेजसः ।। १० ।। पश्चादशेषतश्चक्रे वाल्मीकिर्भगवानृषिः । अयोध्यावर्णनं चैव गुणान् दशरथस्य च ।। ११ ।। मंत्रिणां च गुरूणां च प्रकृतीनां तथैव च । प्रकाशं च रहस्यं च यत्परस्परचेष्टितं ।। १२ ।। कथयामि यथावृत्तं निखिलेन विशेषतः । ऋषिश्रृंगाभिगमनं कुमाराणां च संभवं ।। १३ ।। विश्वामित्राभिगमनं रामस्य च विसर्जनं । नाना कथाश्चाप्यभवन् विश्वामित्रमहावने ।। १४ ।। धनुर्भेदं च मिथिलां वैदेहानां प्रतिक्रिया । रामरामविवादं च गुणा रामस्य कीर्त्तिताः ।। १५ ।। तथाभिषेकं रामस्य प्रकृतीनां प्रतिक्रिया । मंथरायाः कुमंत्रं च कैकेय्या दुष्टभावता ।। १६ ।। व्याघातं चाभिषेकस्य...सनं । राज्ञः...च कौशल्याश्च तथैव च ।। १७ ।। प्रकृतीनां...तथैव च...र्जनं । गंगाया...सत्तारं पत्रैश्चापि निवासनं ।। १८ ।। रात्रौ शोकोविलापश्च रामस्य च महात्मना । लक्ष्मणेनाश्वासितश्च प्रकृत्यं च स्वयं गतः ।। १९ ।। निषादाधिपसंवादं ततस्तस्य निवर्तनं । गंगाया...दर्शनं ।। २० ।। भरद्वाजस्य वचनात् चि...र्शनं । वास्तु...तथा ।। २१ ।। प्रसादनं...क्रिया । पादुकास्वभिषेकं च अगस्त्यस्य विसर्जनं ।। २२ ।। दंड...गमनं सुतीक्ष्णेन समागमं । अनसूयासमायोगमंग...र्पणं ।। २३ ।। शरभंगाश्रमे वासं शक्रेण सहसंगमं । अगस्त्याश्रमवासं च अगस्त्यस्यविसर्जनं ।। २४ ।। समागमं विराधेन वासं पंचवटे तथा । सूर्पणख्या प्रहासं च वि...था ।। २५ ।। बधं...रावणस्य च । मारीचस्य विनाशं च वै...था ।। २६ ।। जटायोर्निधनं चैव विलापं राघवस्य च । कवचग्रहणं चैव कबंधस्य वधं तथा ।। २७ ।। शबर्या दर्शनं चैव पंपासंदर्शनं तथा । ऋष्य...गमं ।। २८ ।। प्रत्ययो...विग्रहं । वालि...नं राज्ये सु...दनं ।। २९ ।। ताराविलापसमये वर्षारात्रि...नं । कोपाद्रा...संग्रहं ।। ३० ।। दिशः...दनं । अंगुली...च तथैव वि...नं ।। ३१ ।। प्रायो...नं शोकं संपातश्चैव दर्शनं । पर्वता...लंघनं ।। ३२ ।। रात्रौ प्रवेशं लंकायां चिंता हनुमतस्तथा । आपानभूमौ गमनं सावरोधस्य दर्शनं ।। ३३ ।। अशोक...कायां च सी...नं । संभाषणं च सीताया अभिज्ञानस्य चार्पणं ।। ३४ ।। मणि...सीतायै...च । रक्षोविद्रवणं...हणं

॥ ३५ ॥ ग्रहणं वानरेंद्रस्य लंकादाहेति गर्जनं । कपिप्रवणमेवापि मधूनां भक्षणं तथा ॥ ३६ ॥ राघवा...तथा । संगमं...बंधनं ॥ ३७ ॥ प्रतारं...स्य रौद्रं...धनं । विभी...दनं ॥ ३८ ॥ कुंभ...च वधं मेघनादाभिमर्दनं । रावण...वार्ति तथैव च ॥ ३९ ॥ विभी...दर्शनं । अयोध्या...गमनं भरतेन समागमं ॥ ४० ॥ रामा...दयं हरिरक्षोविसर्जनं । सीतायाश्च परित्यागं प्रकृतीरंजनं तथा ॥ ४१ ॥ अना...तले । तच्च...त्तरेकांडे रितं भगवानृषिः ॥ ४२ ॥ अभ्यागममृषीणां च शत्रुघ्नस्य विसर्जनं । स्थाप्य राज्ये सुतान् पौरैः सार्धं यातो यथा दिवं ॥ ४४ ॥ ऋक्षवानरगोपुच्छैस्तथा जनपदैरपि । एतत्स तपसा दृष्ट्वा निखिलेन महामुनिः ॥ ४५ ॥ चरितं सत्यसंधस्य सर्वं काव्ये चकार ह । ततः पुनरहः ( समासांतर्गत-" दिने दिने । " ) किंचिदुपश्लोकयते मुनिः ॥ ४६ ॥ तं ब्रह्मा संप्रहस्यैव श्लोक इत्यब्रवीद्वचः । ततः शिष्याश्च वृद्धाश्च सर्वेचान्ये तपस्विनः ॥ ४७ ॥ अभिवाद्य महात्मानमृषिवाक्यं विचारयत् । पादबद्धश्चतुष्पादः श्लोकांते च महर्षिणा ॥ ४८ ॥ अत्र व्याहरणार्थे वै शोकः श्लोकत्वमागतः । तस्य बुद्धिरियं जाता वाल्मीकेर्भावितात्मनः ॥ ४९ ॥ कृत्स्नं रामायणं काव्यं अयमेव करोम्यहं । यथा मे ब्रह्मणा प्रोक्तं नारदस्य च दर्शने ॥ ५० ॥ श्रुत्वा सवस्तुमात्रं हि धर्म्मज्ञो धर्म्मसंहितौ । वक्तुमन्विष्यते भूयो यद्वृत्तं तत्र तत्वतः ॥ ५१ ॥ प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार...तं तस्य...पदमात्मवान् ॥ ५२ ॥ कृत्वा...प्राज्ञः काव्यं रामायणं शुभं । कोपीदं प्रथमं लोके प्रयुंजीताभ्यचिंतयन् ॥ ५३ ॥ तस्य...त्मनः । बालौ जग्रहतुः पादौ...लवौ ॥ ५४ ॥ कुशी...स धर्म्मात्मा राम...नौ । भ्रातरौ सत्य...नौ ॥ ५५ ॥ सतौ...तौ । मुनिर्मूर्द्धन्युपाघ्राय वचनं चेदमब्रवीत् ॥ ५६ ॥ कृत्स्नं रामायणं तावन्मया काव्यमिदं कृतं । गृह्यतां मन्नियोगेन पुण्यश्रवणकीर्त्तनं ॥ ५७ ॥ एवमुक्त्वा तु भगवान् प्रयतः प्राग्मुखःस्थितः । सम्यगध्यापयामास काव्यं रामकथाश्रयं ॥ ५८ ॥ वेदोपग्रहणार्थाय तावद्ग्राहयतां पुनः । काव्यं...यणं यस्तु सीता...त् ॥ ५९ ॥ पौलस्त्य... इत्यर्थं नियतं नियतात्मना । वाग्विधेयं यदा ताभ्यां कृतं तच्चाप्यशेषतः ॥ ६० ॥ पुण्यं रामायणं काव्यं तदा तौ मुनिरब्रवीत् । गीयतामिदमाख्यातं भवद्भ्यामृषिसन्निधौ ॥ ६१ ॥ राजर्षीणां पुण्यकृतां साधूनां च समागमे । श्रुत्वा ततो गुरोर्वाक्यं शिरसा प्रतिगृह्य च ॥ ६२ ॥ तौ कदाचित्समेतानामृषीणां देवरूपिणां । सभासीनां शुभां वाचं रामायणमुदीरतु ॥ ६३ ॥ तच्छ्रुत्वा...क्षणाः ॥ ६४ ॥ काव्यं रामायणं मध्ये सहितावभ्यगायतां । यदोपदिष्टमृषिणा सान्निध्ये ब्रह्मवादिनां ॥ ६५ ॥ तयोर्ब्रह्माभवत्प्रीतः सेंद्राश्चसुरसत्तमाः । गंधर्वाश्च प्लवंगाश्च ( समासे— " गरुडादयः । " ) पन्नगाः समहर्षयः ॥ ६६ ॥ तच्छृण्वतां तदा काव्यमृषीणां हर्षसंभवः । सद्यः सोभून्महान् शब्दः साधु साध्विति शंस तां ॥ ६७ ॥ सुप्रीत...वत्सलाः । शशंसुर्भ्रातरौ तत्र गाय...लवौ ॥ ६८ ॥ अहो भावानुगं काव्यमाभ्यां गीयेत विस्तरं । पेशलं मधुरं चैव परया स्वरसंपदा ॥ ६९ ॥ अहो भगवता काव्यमिदं रामायणं कृतं । चिरवृत्तमपि ह्येतत्प्रत्यक्षमिव दृश्यते ॥ ७० ॥ संहतं मधुरं चैव समाक्षरपदक्रमं । प्रयोक्ताराविमौ चापि सम्यगस्य कुशीलवौ ॥ ७१ ॥ कुमारौ देवगर्भाभौ ( समासे— " देवपुत्र तु... । " ) तरुणौ मधुरस्वरौ । अहो श्राव्यमहोस्वाद्यं अहो गीतं सुविस्तरं ॥ ७२ ॥ एवं...तौ श्लाघ्यमानौ महर्षिभिः । राजधानीषु राज्ञा च समीपेष्वथ गायतां ॥ ७३ ॥ रथ्यासु राजमार्गेषु तौ तु शुश्राव राघवः । अथाश्वमेधे रामोऽपि तावुपश्रुत्य गायतौ ॥ ७४ ॥ आनयामास सत्कृत्य पुरुषैराप्तकारिभिः । पूजयामास पूजार्हौ सत्कारार्हौ सुसंस्कृतौ ॥ ७५ ॥ ताविदं जगतुस्तत्र काव्यं रामकथाश्रयं । कर्म्मांतरेषु विप्राणां रामलक्ष्मणसन्निधौ ॥ ७६ ॥ शत्रुघ्नभरतादीनामन्येषां च महात्मनां । वसिष्ठात्रिपुरोगाणां सन्निधौ ब्रह्मवादिनां ॥ ७७ ॥ रामस्तत्रासने शुभ्रे स्यद्वीस्तरणसंयुते । सुखोपविष्टः शुश्राव तदात्मचरितं महत् ॥ ७८ ॥ श्रूयतामिदमाख्यानमुभयोरत्र गायतोः । विचित्रार्थपदं रम्यं गायंतौ मधुरस्वरं ॥ ७९ ॥

बालाविमौ पार्थिव...चैव तपोवनाश्रयौ । ममेति वृत्तं किल गानमद्भुतं महर्षिवाल्मीकिकृतं प्रगास्यतः ॥ ८० ॥ ततस्तु...प्रमोदिता...यतां काव्यमिदं यथाक्रमं । स...रामः सहितैः सभागतैर्बभूव तत्रार्पित चेतनस्तदा ॥ ८१ ॥ इत्यार्षे श्रीरामायणे अयोध्याकांडे वस्तूत्पादनं नामः सर्गः ॥ छ ॥ ३ ॥ श्लो० २०९ ॥

सागरांता मही येषामासीद्वीर्याजिता किल । आत्मनः पुण्यकीर्त्तीनां राज्ञाममिततेजसां ॥ १ ॥ सगरः पूर्वजो येषां सागरो...नितः । षष्टि...यन् ॥ २ ॥ नक्षत्रराजं वर्धतेन्यभ्राज्योतिर्गणाइव । इक्ष्वा...तेषां वंशकीर्त्तिविवर्द्धनं ॥ ३ ॥ निवद्धं पुण्यमाख्यानं...श्रुतं । तदिदं श्रूयतां पुण्यमार्षं पापभयापहं ॥ ४ ॥ धर्म्मकामार्थसहितं नानाश्रुत्युपबृंहितं । कौसलो...महान् ॥ ५ ॥ निविष्टः...रे पशुधान्यधनर्द्धिमान् । अयोध्या...श्रुता ॥ ६ ॥ मनुना...ण पुरा समभि निर्मिता । आयता...पुरी ॥ ७ ॥ श्रीमती...पथा । राज...सुशोभिता ॥ ८ ॥ बहुपुष्पा...जलसंशांतरेणुना । पताकातोरण...त्तचतुष्पथा ॥ ९ ॥ सर्वयंत्राबुधवतीत्युपेता स...भिः । उद्दाहालब्धयुवती शतघ्नीशतसंवृत्ताः ॥ १० ॥ सूत...षसंघुष्टा श्रीमती सर्वतः शुभा । उद्यानोपवनोपेता सुमहाशाल...ला ॥ ११ ॥ दुर्गा...खा गुप्ताचान्यैर्दुरासदा । वाजि...स्तथा ॥ १२ ॥ नानादेश...भिता । दुंदुभी...वेणु...स्तथा ॥ १३ ॥ नादिता...र्थै प्रथिता सा त्वनुत्तमा । प्रासादजालैर्बहुभिः पर्वतैरुपशोभिता ॥१४॥ कूटागारैश्च संछन्ना शक्रस्येवामरावती । विमान...दिवि ॥ १५ ॥ सुनि...वेशा सा नरनारीसमाकुलाः। विचित्राष्टापदाकारा नानाद्रव्यसमुच्चया ॥१६॥ सर्वरत्न...र्णा विमानवरशोभिता। तत्र राजा दशरथो धृतिमान्यिष्टिवर्द्धनः ॥१७॥ दीर्घ...पदप्रियः । इक्ष्वाकूणा...धर्म्मभृतांवरः ॥ १८ ॥ महर्षि...विश्रुतः । बल...मित्रः सत्यवाग्विजितेंद्रियः ॥ १९ ॥ धनस्य...श्चापि...पमः । यथा...लोकानां...ता ॥२०॥ तेव...ष्टता । पालिता...शक्रेणे...ती ॥२१॥ तस्मि...रे रम्ये...ताः । नरा...दिनः ॥२२॥ न चाल्प...त्तमे । कुटुंबी यो नभिशांगे न चाप्य धन...न् ॥ २३ ॥ नातिमानी कदर्यो...षोऽपि वा । द्रष्टुं शक्यस्त्वयोध्याया स विद्वान्नास्तिकोऽपि वा ॥ २४ ॥ सर्वे...र्यश्च दानशीलाः सुधार्म्मिकाः । वेदज्ञा वृत्तशीलज्ञा मह...मलाः ॥२५॥ ना...ग्वी नाविलेपनी । नाहस्ता...ध्ययान्वान् ॥२६॥ नाना...ग्निर्योयज्वा विश्रद्धो वा सहस्रदः । काश्चि...यां सद्वृत्तरहितो नरः ॥ २७ ॥ स्व...याः । यज्ञाध्यननित्याश्च विरताश्च प्रतिग्रहात् ॥ २८ ॥ न ना...नानृतवान्न क...तः । नासू...नावात्सल्यो नाशुचिस्तत्र दृश्यते ॥ २९ ॥ नामृष्टभोक्ता वा दाता ना सुगंधो न चानृजुः । न दुःखी पुरुषः कश्चिन्नवासीदनलंकृतः ॥ ३० ॥ रूपचातुर्यमाधुर्यशीलाचारगुणान्वितः । नार्यश्चासीन्नयोध्यायां मृष्टाभरणवाससः ॥ ३१ ॥ नानात्मवान्न चक्रूरो न विरूपो न चालसः । काश्चिदासीदयोध्यायां नाश्रीमान्न महाशनः ॥ ३२ ॥ न दीनो नापिचोद्विग्नो नातुरो न भयान्वितः । दृष्टुं शक्य...भक्तिमान् ॥ ३३ ॥ वर्णज्येष्ठान् पूजयंतः पितृदेवातिथींस्तदा । वर्णेष्व...पूजकः ॥ ३४ ॥ आसन्दीर्घायुषस्तत्र नराः सत्यपराक्रमाः आसीत्क्षत्राद्ब्रह्मसुखं वैश्याः...ताः ॥ ३५ ॥ शूद्राः...र्णानभ्यपूजयन् । न योनिसंकरश्चासीत्तत्र नाचारसंकरः ॥ ३६ ॥ एवमिक्ष्वाकनाथेन पालिता सा भवत्पुरी । यथा...ना प्रजेयं परिपालिता ॥ ३७ ॥ योधा...ल्पानां संयुगेष्वनिवर्तिनां । गुप्ता पुरी सहस्रैः सा सिंहैरिव गिरेर्गुहा ॥ ३८ ॥ कांबोजदेशजैश्चापि हयैर्वानायुजैस्तथा । नदीजैर्बाह्लिकैश्चापि पूर्णा...योपमैः ॥ ३९ ॥ विंध्य...जैर्नागैस्तथा है...पि । ऐरावणकुलीनैश्च सत्ववद्भिर्गुणान्विकैः ॥ ४० ॥ कुमदांजनकुलोद्भूतैरंजनादपि निर्वृतैः । भद्रमंदमृगैर्मेंद्रैर्वामनैरपि च द्विपैः ॥ ४१ ॥ पुरी सा बहुभिः कीर्णा तथासीद्रंघहस्तिभिः । अयोधनादयोध्या सा सत्यनामा प्रकाशते । निर्जराभूत्पुरी सा तु पुरा दशरथे नृपे ॥ ४३ ॥ तां सत्य...र्गलां महर्षिभिर्वेश्मवरैरलंकृतां । पुरीं महोद्यानसह...लां...पतिः ॥ ४४ ॥ इत्यार्षे श्रीरा...णे अयो...डे राज्यवर्णनोनाम सर्गः ॥ छ ॥ ४ ॥ २५३ ॥

मंत्रिणो ऋत्विजौ चैव तस्यास्तामृषिसत्तमौ। वसिष्ठो वामदेवश्च वेदवेदांगपारगौ॥ १॥ अष्टावन्ये बभूवुश्च तस्यामात्या महीपतेः। सुष्टि...जयः सिद्धार्थो रा...नः॥ २॥ अशोको ध...मो भवत्। शुचयश्चानुरक्ताश्च राजकर्म्मसु नोदिताः॥ ३॥ ह्रीमंतो विनयोपेता नीतिज्ञा विजितेंद्रियाः। कांतिमंतश्चाभिरता (समासे-राज्ञः प्रीतिरताः।) राज्ञां आदेशकारिणः॥ ४॥ तेजः क्षमा वयोवृद्धा स्मि...षणः। अलुब्धवृत्तिमंतश्च सत्यधर्म्मपरायणाः॥ ५॥ नैषामविदितं चासीत् स्वेषु चैव परेषु च। राज्ञामिन्त्रा-युदासीनमध्यस्थानां चिकीर्षितं॥ ६॥ धर्म्माचारविवादज्ञाः सर्वत्र समदर्शिनः। कोशसंरक्षणसंयुक्तास्तथा बलपरिग्रहे॥ ७॥ पुत्रेऽपि च प्राप्तदोषे धर्म्मतो दंडपातिनः। आयोद्धारः सुधर्म्मेण शत्रोरपि कृतागसः॥ ८॥ (समासे-कृतापराधस्य।) आगतज्ञानविज्ञानाः पितृपैतामहोचिताः। रक्षितारश्च वर्णानां नित्यं विषयवासिनां॥ ९॥ कोश...युक्ता ब्रह्मस्वस्याविहंसकाः। अभीरुदंडवेत्तारः परीता (समासे-युक्ता।) दंडपौरुषैः॥ १०॥ परस्परेणाविरुद्धाः प्रीतिमंतः प्रियंवदाः। परापवादविरता गुणाढ्या न च गर्विताः॥ ११॥ आर्यवेषाः सुवचसो न च संघुष्टबुद्धयः। नरेंद्रवचनासक्ता चेतसस्तत्परायणाः॥ १२॥ सुराष्ट्रेषु सुविख्याता नयबुद्धिगुणांशुभिः। आसन्मुनिगृहीतास्तैः सर्वे वर्णाः स्वकर्मसु॥ १३॥ नासीत्पुरे वा राष्ट्रे वा तस्करो नाशुचिर्नरः। न दुष्टश्चाभवत्कश्चित् परदारानसूयकः॥ १४॥ कृत्स्नमासीदनुद्विग्नं राष्ट्रं तैः परिपालितं। अमात्यैरीदृशैस्तैः स राजा दशरथोन्वितः॥ १५॥ पालयामास धर्म्मेण पृथिवीमनुरंजयन्। अवेक्ष्यमाणश्चारेण मही सूर्यइवांशुभिः॥ १६॥ नाभ्यगच्छच्चकचित्किंचिदिक्ष्वाकुः शत्रुमात्मनः। तैर्मंत्रिभिर्मंत्रहितैर्निविष्टैर्विद्वद्भिराप्तैः कु...थैः। स...वोदय्यितदीप्तिमद्भिस्तेजो...र्कः॥ १७॥ इति श्री रा...णे अयो...डे अमात्यवर्णनं नाम सर्गः॥ छ॥ ५॥ २७०॥

तस्य चैवं प्रधानस्य...त्मनः। सुतार्थे त...स्य नाभूद्वंशकरः सुतः॥ १॥ तस्य च्चिंतयतो बुद्धिरुत्पन्नेयं महात्मनः। सुतार्थे...किं पुनर्न...हं॥ २॥ सुनिश्चितां...ष्टव्ये वसुधाधिपः। मंत्रिभिःसह संमंत्र्य स्वामिने हितकारिभिः॥ ३॥ ततोऽब्रवीदिदं राजा सु...मं। शीघ्र...र्वान् वसिष्ठप्रमुखान् गुरून्॥ ४॥ (क—९) एवमुक्तो नृपतिना सुमंत्रो वाक्यमब्रवीत्। नरेंद्र श्रूयतां एतां एतत् पुरा...यन्मया श्रुतं॥ ५॥ (समासे—श्रूयतां यत्पुरावृत्तं। १ पाठः।) सनत्कु...कथां। ऋषीणां प्रति॥ ६॥ कश्यप...श्रुतः। ऋष्य...ष्यति॥ ७॥ स...जातः संवृद्धः ऋषिपुत्रो नरेश्वर। नान्यं प्रज्ञासते किंचिन्मानुषं पितरं विना॥ ८॥ तस्य तत्त्वं ब्रह्मचर्यं भ...त्मनः। लोकेषु प्रथितं चोग्रं तपस्तस्य भविष्यति। ९। तपोरतस्य तस्यैव कालः समभिवत्स्यत (समासे—गत)। अग्नि...स्विनः॥ १०॥ एत...लोम...वान्। अंगे...बलः॥ ११॥ तस्य...क्रम भवा भवि...णा। अनावृष्टिर्जनपदे क्षयाय बहुवार्षिकी॥ १२॥ अनावृष्ट्या तया राजा स तदा परिकर्शितः। प्रक्ष्यति ज्ञानिनो विप्रान् नानावृष्टिप्रतिक्रियां॥ १३॥ भवंतः श्रुतवृत्तज्ञा लोकवृत्तांतवेदिनः। ममाज्ञां दातुमर्हंति यथावत्प्रशमेदियं॥ १४॥ ते तमाज्ञापयिष्यंति श्रुतिदृष्टांतवेदिनः। विभांडकं...यैस्त्वमानय॥ १५॥ आनयैवं महात्मानमृष्यशृंगं मुनेःसुतं। प्रयच्छास्मै सुतां भार्यां शांतां च सु...तः॥ १६॥ तेषां तद्वचनं...तामवाप्स्यति। केनोपायेनानयेयमृषिशृंगमिति प्रभुः॥ १७॥ स निश्चयं तदा राजा स्वयमेव करिष्यति। तदामात्यान् समाहूय परिपृच्छत्यसंशयं॥ १८॥ पुरोहितं जनांश्चान्यान् मंत्रनिश्चयकोविदान्। ते चैव पृष्टास्तैस्तत्र प्रतिपत्स्यंति निश्चयं॥ १९॥ यदा तदा स्वकान् राजा मंत्रिणस्तत्र वक्ष्यति। मन्नियोगादृषेःपुत्रं गत्त्वानयत तत्स्वयं॥ २०॥ ते च राज्ञो...थिता दीनचेतसः। न गच्छाम...ताः प्रतिवक्ष्यंति तं नृपं॥ २१॥ चिंतयित्वास्य कार्यस्य प्रतिपत्स्याम निश्चयं। इति तेषां वचः श्रुत्वा भूयः स पृथिवीपतिः॥ २२॥ तैरेव सह संचित्य मंत्रिभिर्मंत्रनिश्चयं।

वेश्याभिर्मुनिरूपाभिरानेष्यति मुनेःसुतं ।। २३ ।। लोभयित्वाप्युपायेन स्वपुरं पितुराश्रमात् । वर्षिष्यति तदा देवस्तस्य राष्ट्रे महीपतेः ।। २४ ।। तस्याभ्यागमतादेव ऋषिपुत्रस्य धीमतः । ततः स राजा विधिवत् शांतां तस्मै प्रदास्यति ।। २५ ।। स्वकां दुहितरं जायां रूपौदार्यगुणान्वितां । एवं तस्य च जामाता भविष्यति महायशाः ।।२६।। लोमपादस्य राजर्षिः ऋष्यश्रृंगः प्रतापवान् । राज्ञो दशरथस्यापि स पुत्रानभिकांक्षितान् ।। २७ ।। विधास्यति महातेजा हविर्हुत्वाध्वराग्निषु । सनत्कुमारस्य वचः पुरैवं संश्रुतं मया ।। २८ ।। ऋषिमध्ये कथयतस्तथा तदिति मे मतं । मंत्रिभिःसहिताश्चैवं तथा तत्कृतवांस्तदा ।। २९ ।। अंगराजो महाप्राज्ञो लोमपादो महायशाः । इति श्रुत्वा दशरथः सुमंत्रं पुनरब्रवीत् ।। ३० ।। कथयेमृषिश्रृंगस्य विस्तरेण त्वयोच्यतां । इत्यार्षे श्रीरामायणे अयो...डे सुमंत्रवाक्यं नामः सर्गः ।। छ ।। ६ ।। ३०० ।।

इति पृष्टः सुमंत्रस्तमाख्यातुमुपचक्रमे । आनीत ऋषिश्रृंगोभूद्येनो...भिः ।। १ ।। लोमपादममात्यास्ते वाक्यमुचुर्महीपतेः । उपायो...परिचिंतितः ।। २ ।। ऋष्य...स्तपसैकरसेस्थितः । अन...शः स ना...च ।। ३ ।। इंद्रि...नैचचिंतापहारिभिः । (समासे—स्रकूचंदनवनिताभिः ।) लोभयित्वाप्युपायेन शीघ्रमानीयतां वनात् ।। ४ ।। मुनिवेषप्रतिच्छन्नास्तत्र गच्छंतु योषितः ।। उपायज्ञाः कलाज्ञाश्च वैशिके (समासे—वशीकरणे) परिनिष्ठिताः ।। ५ ।। गणिका...कृताः । रहस्युपेत्य ता एवमानयंतु शुभव्रतं ।। ६ ।। लोभयित्वा यथायोग्यं येनोपायेन शक्यते । श्रुत्वा...ति तद्राजा प्रत्युवाच विचारयन् ।। ७ ।। मंत्रिभिः सहितश्चैव तथा तत्कृतवांस्तदा । वारमुख्यस्ततो वेश्या गत्वा तं निर्जनं वनं ।। ८ ।। नातिदूरे ततस्तस्थुराश्रमस्य महामुनेः । ...दर्शनार्थिन्यऋषिश्रृंगस्य धीमतः ।। ९ ।। विभांडकभयोद्विग्ना वनगुल्मलतावृताः । विचारयित्वा तमृषिमाश्रमादभिनिर्गतं ।। १० ।। ततः संदर्शने तस्थुर्ऋषिपुत्रांतिके पुनः । दृष्ट्वैव च सुचार्वंग्यस्तास्तदा तनुमध्यमाः ।। ११ ।। निर्ज्जगामाश्रमात्तूर्णमृष्यश्रृंगो मुनेःसुतः । न तेन...दृष्टपूर्वाः श्रुतास्तथा ।। १२ ।। नार्यो वा पुरुषा वाथ पुरराष्ट्रनिवासिनः । स तं देशमुपागम्य जातकौतूहलस्तदा ।। १३ ।। विभांडकसुतो राजंस्तस्थौ विस्मितमानसः । ताश्च तं विस्मितं दृष्ट्वा जगुः कलपदाक्षरं ।। १४ ।। गीतं मधुरभाषिण्यो जहसुश्चायतेक्षणाः । अब्रुवंश्चैवमभ्यासमागतं मदविह्वलं ।। १५ ।। ऋषिपुत्रं समागम्य...ब्रुवन् । एकश्च व्यजनेऽरण्ये करमाच्चरसि शंसनः ।। १६ ।। ज्ञातुं त्वां वयमिच्छामस्तत्त्वमाख्याहि नः प्रभो । अदृष्टपूर्वास्ता दृष्ट्वा चारुरूपधरा स्त्रियः ।। १७ ।। ऋषिपुत्रस्तदात्मानमाख्यातुमुपचक्रमे । विभांडको मम पिता सुतस्तस्याहमौरसः ।। १८ ।। ऋषि...भुवि । आश्रमोयमिहास्माकं स्वादुमूलफलान्वितः ।। १९ ।। करिष्ये तत्र पूजां च सर्वेषामभिगम्यतां । ऋषि...त्वा तासां मतिरजायत ।। २० ।। तदा...ष्टुं प्रजग्मुः सहितास्ततः । तत्र पूजां ततश्चक्रे तासामृषिसुतस्तदा ।। २१ ।। इद...मिदंचापि फलोदकं । प्रतिगृह्य ततः पूजां सर्वास्ताः परिशंकिताः ।। २२ ।। ऋषेः शापभयोद्विग्ना गम...दधुः । अथैनमूचुस्ता वाक्यं हसमाना इदं पुनः ।। २३ ।। अस्माकं त्वमृषेःपुत्र स्वादूनीमानि भक्षय । फलान्याश्रमजातानि यदि रोचंति तेऽनघ ।। २४ ।। अथास्यै प्रददुः स्वादून्मोदकान्फलसन्निभान् । अन्यांश्च विविधान्भक्षान्मधूनि मधुराणि च ।। २५ ।। तीर्थोदकमिदं तावत्प्रीयतामिह भूपतेः । तान्वास्वादंश्च तेजस्वी फलानीतित्वमन्यत ।। २६ ।। अनास्वा...बने वननिवासिना । परिषस्वजिरे चैनं हसंत्यो मदविह्वलाः ।। २७ ।। पस्पर्शे च शिरश्चैनं पीनैरुरसिजैर्मुहुः । श्रोत्रमूले चोपजगुर्वदनैर्मदगंधिभिः ।। २८ ।। सोमन्यत फलानीति मोदकांस्तान् सुवर्त्तुलान् । भक्षांश्च विविधान् स्वादून्फलाकारान् सुयोजितान् ।। २९ ।। अनाभ्यासितपूर्वाणि फलान्यास्वादितानि सः । मधूनि तानि चास्वाद्य पीत्वा च मुदितोऽभवत् ।। ३० ।। सुकुमारैश्च तैरंगैस्ताभिः स्पृष्टो व्यमुह्यत । चकार च स्पृहां तासां स्पर्शस्य ललितस्य च ।। ३१ ।। अथ पृष्ट्वा मुनिसुतं ताः स्त्रियः

प्रययुस्ततः। स्वमाश्रमपदं नाम व्यपदिश्य च दूरतः॥ ३२॥ तासु प्रतिगतास्वेव ऋष्यशृंगः समुत्सुकः। तद्गतेनैव मनसा अनिद्रामभ्यगच्छत॥ ३३॥ अथापरेद्युस्तं देशमाजगाम स सत्वरः। मान्यस्वरूपा यत्रैव दृष्टास्ताश्चारुमध्यमाः॥ ३४॥ ताश्च दृष्ट्वैव दूरात्तमायांतं काश्यपात्मजं। प्रत्युद्गम्याब्रुवन् वाक्यं प्रहसंत्य इदं तदा॥ ३५॥ एह्याश्रमपदं रम्यं पश्यास्माकमिति प्रभो। तत्र पूजामवाप्याग्र्यां पुनरभ्यागमिष्यसि॥ ३६॥ श्रुत्वा च...गमं। गमना...चक्रे ताश्चैनं नित्युरंगनाः॥३७॥ आनीयमान एवाथ तस्मिन्नृषिसुते ततः। प्रववर्ष तदा देवस्तस्य राष्ट्रे महीपतेः॥३८॥ वर्षेणैवागतं मत्वा सदृशा स...धिपः। प्रत्युद्गम्यार्च्चयांचक्रे शिरसा च महीं ययौ॥ ३९॥ अर्घ्यं...तस्मै पुरस्कृत्य पुरोहितं। सांतःपुरजनश्चैनं...शांतयन्निव॥ ४०॥ महार्हैश्चेप्सितैर्भोगैर्युयुजे तं प्रसादितं। स्वयं च प्रचचारैनं मन्युर्नास्य भवेदिति॥ ४१॥ ददौ कन्यां ततस्तस्मै भार्यां कमललोचनां। शांतां शांतेन मनसा राजा हर्षमवाप च॥४२॥ एवं स...स्तत्र तेन राज्ञाभिपूजितः। ऋष्य...भार्यया॥४३॥ आर्षे रामायणे अयोध्याकांडे ऋष्यशृंगोपाख्यानं नामः सर्गः॥ छ॥ ७॥ ३४३॥

भूय एव महाराज शृणु मेद्य हितं वचः। सनत्कुमाराद्वदतः श्रुतं मे वचनं यथा॥ १॥ इक्ष्वाकुवंशजो राजा भ...ति महायशाः। नाम्ना...थोनाम धीमान् धर्म्मपरायणः॥ २॥ सख्यं तस्यांगराजेन भविष्यति महात्मनः। कन्या तस्य...ति॥ ३॥ अंगराजोनपत्यस्तु लोम...तः। स राजानं दशरथं प्रार्थयिष्यति भूमिपः॥ ४॥ अनपत्यस्य मे कन्यां सखे त्वं दातुमर्हसि। श्रुत्वा च दशरथश्चास्य विचिंत्य मनसा चिरं॥ ५॥ दास्यते तां तदा तस्मै शांतां दुहितरं प्रियां। प्रतिगृह्य च तां कन्यां स...ज्वरः॥ ६॥ स्वपुरं यास्यति प्रीतः प्रह...ना। तां कन्यामृषिशृंगाय स प्रदास्यति वीर्यवान्॥ ७॥ ऋषिशृंगस्ततः प्रीतो लब्ध्वा भार्यां भविष्यति। तं च...थो होतारं वरयिष्यति॥ ८॥ यष्टुं यज्ञं पुत्रकामः समुपेत्य कृतांजलिः। लप्स्यते स च...पतिः॥ ९॥ सुताश्चास्य...क्रमाः। वंश...लोकेषु विश्रुताः॥ १०॥ एवं...कथां। सन...भगवन्निमां मुनिसमागमे॥ ११॥ स...मनुजशार्दूल तमा...कृतं। स्वय...वाहनः॥ १२॥ स तस्य वचनं श्रुत्वा राजा संपूर्णमानसः। अनुगम्य व...निवेद्य च॥ १३॥ वसिष्ठेनाभ्यनुज्ञातः प्रीतो दशरथस्तथा। सांतः...द्विजः॥ १४॥ वनानि...व विनिक्रम्य...नैः। लोमपादपुरं श्रीमान् प्रविवेशाभिपूजितः॥ १५॥ ततो ददर्श राजासौ लोमपादनिवेशने। ऋषिपुत्रं दशरथो दीप्य...नलं॥ १६॥ ततो राजा दशरथं प्रियातिथिमुपागतं। ततो राजा लोमपादः पूजां तस्य चकार ह॥ १७॥ सखित्वात्तत्र राज्ञश्च प्र...ना। स एवं पूजितस्तेन वसंस्तत्र नरर्षभः॥ १८॥ सप्ता...राजा ततो वचनमब्रवीत्। शांता...सुता वीरं सह...पते॥ १९॥ मदीयं...तं। तथेति...धीमतः॥ २०॥ लोमपादोऽगमद्वक्तुमृषिपुत्राय धीमते। ऋषिशृंगाय चैवेति न्यवेदयदनंतरं॥ २१॥ अयं राजा दशरथः सखा मे दयितः सुहृत्। अपत्यार्थं ममानेन दत्तेयं वरवर्णिनी॥ २२॥ याच्यमानस्य मे विप्र शांता प्रियतरात्मजा। सोऽयं ते श्वशुरो विप्र यथैवाहं तथा नृपः॥ २३॥ शरणं त्वामनुप्राप्तः पुत्रार्थी द्विजसत्तमः। पुत्रकाममिमं तात सफलं कर्तुमर्हसि॥ २४॥ तारयैनमितो गत्वा शांतया सहभार्यया। ऋषिपुत्रोथ तच्छ्रुत्वा तथे...तदा॥ २५॥ गच्छेति विप्रवचनाद्राजोवाच ततो नृपं। नृपेण चाभ्यनुज्ञात...या॥ २६॥ तावन्योन्यकुशलं कृत्वा संश्लिष्य-चोरसा। गमने मतिमाधत्त राजा दशरथस्तदा॥ २७॥ सोनुज्ञातो दशरथ तेन राज्ञा महीपतिः। प्रययौ स्वां पुरीं वीरः शांतामादाय सत्वरं॥ २८॥ ततो राजा प्रहृष्टात्मा प्रेषयामास वै तदा। क्रियतां नगरं...कृतं॥ २९॥ ततः...मागतं। तथा...तदा॥ ३०॥ ततः...ह। शंख...निर्घोषैः...र्षभं॥ ३१॥ ततः...द्विजं। प्रवेश्य...

कर्मणा ॥ ३२ ॥ अंतःपुराणि...गतां । सह...क्षीं प्रत्यनंद मुदा यथा ॥ ३४ ॥ संपूज्यमानः स्तुतिभिर्यथा राजा विशेषतः । उवास...सुसुखं...लं द्विजर्षभः ॥ ३५ ॥ उपास्यमानः शुशुभे शांतया दिव्य रूपया । अरुंधती सहायेन वसिष्ठो ब्रह्मणः सुतः ॥ ३६ ॥ इत्यार्षे श्रीरा...ण अयो...डे ऋष्यशृंगागमनोनामः सर्गः ॥ छ ॥ ८ ॥

ततः...तिथि...हरे । वसंते...मनागमत् ॥ १ ॥ ततः प्रसाद्य...र्णिनं । यज्ञार्थे...नार्थे च बुद्धिमान् ॥ २ ॥ तथेति...वाचप्राप्तसत्क्रियः । संभाराः...ता च सहायश्च द्विजातयः ॥ ३ ॥ ततो राजाब्रवीत्सूतं ब्राह्मणान् सपुरोहितान् । क्षिप्रमानय धर्म्मज्ञ यज्ञार्थे मम सुव्रतान् ॥ ४ ॥ वेदविद्याव्रतस्नातान् यज्ञकर्म्मसुनिष्ठितान् । सूत्रभाष्य-विदश्चैव वेदवेदांगपारगान् ॥ ५ ॥ सुमंत्रं वामदेव...लिं कश्यपं तथा । पुरो...च तथैवान्यान् द्विजोत्तमान् ॥ ६ ॥ तानागतान् द्विजान् राजा पूजयामास धार्मिकः । पूजयित्वातु...स्तदा ॥ ७ ॥ इदं धर्म्मार्थसहितं श्लक्ष्णं...त् । मम लालप्य...वै सुतः ॥८॥ तदहं हय...र्मम । तदर्थं यष्टुकामोद्य हयपूर्वेण कर्म्मणा ॥९॥ ऋषि...र्स्याम्यभीप्सितं । ततः...यन् ॥ १० ॥ वसिष्ठ ..च्युतं । ऋष्य...ततः ११न ॥ ११ ॥ संभाराः च्यतां सर्वथा...विक्रमान् ॥ १२ ॥ यस्य...मागता । ततः...भाषितं ॥ १३ ॥ अमात्यांश्चाब्रवीत्तत्र हर्षवेगाकुलाक्षरं । गुरूणां...मे ॥ १४ ॥ अमात्याधिष्ठितश्चाश्वः...च्यतां । शांतोयश्चान्यकल्प्यंतां तत्र कल्पैर्यथाविधि ॥ १५ ॥ शक्यमाप्तुं यथा यज्ञं सर्वेणेदं महीक्षता । सरय्वाः सरितः पारे यज्ञभूमिर्विधीयतां ॥ १६ ॥ नापचारो भवेद्दुष्टो यथास्मिन् क्रतुपुंगवे । छिद्रं...गयत्यत्र वि...सः ॥ १७ ॥ विघ्ने तु तस्य यज्ञस्य कर्ता सद्यो वि...ति । तद्यथा...र्यते ॥ १८ ॥ तथा...समर्थंतत्र कर्म्मणि । तथेति तद्वचः सर्वे...समपूजयन् ॥ १९ ॥ पार्थिवेंद्रस्य तत्सर्वं यथाज्ञां प्रत्यपालयन् । ततो...धर्म्मज्ञा वर्द्धयित्वा च तं नृपं ॥ २० ॥ अनु...स्तथा राज्ञा प्रतिजग्मु...तं । गतेषु द्विजमुख्येषु मंत्रिणोपि नराधिपः ॥ २१ ॥ विसर्ज्य सर्वान् स्वं...द्युतिः । पुत्रार्थे समभिप्रेतं निवृत्तंचाभ्यमन्यत ॥ २२ ॥ इत्यार्षे श्रीरा...णे अयो...डे यज्ञकर्म्मार्चिंतनं नाम सर्गः ॥ छ ॥ ९ ॥

पुनः...भवत् । आभिवाद्य...पूजयन् ॥ १ ॥ अब्रवी...त्तमं । यज्ञः स क्रियतां शीघ्रं यथाशास्त्रं सुनिष्ठितः । ॥ २ ॥ यथा न...यज्ञंगेनेहकेनाचित् । भवान्...भवान् ॥ ३ ॥ वोढव्यो...यज्ञार्थमुद्यतः । तथेति...सत्तमः ॥ ४ ॥ करिष्ये...भवतो यदभीप्सितं । ततो...विद्वान्...निश्चितान् ॥ ५ ॥ स्थापत्ये चेह स्थाप्यंतां वृद्धाः परमधार्म्मिकाः । कर्म्मातका...अपि ॥६॥ गणका...श्चान्ये तथान्ये नट...काः । ततो ब्रवीच्छास्त्र...तान् ॥ ७ ॥ यज्ञ...नात् । विष्टिं च...स्त्रीं शीघ्रंचाहूयत द्विजान् ॥ ८ ॥ उपकार्याः ( समासे-पटमंडपाः । )...राज्ञां...ताः । ब्रह्मणा...क्रियंतां...शुभाः ॥ ९ ॥ भक्ष्या...ष्ठिताः । तथा...बहुविस्तराः ॥ १० ॥ आवासा...भक्षान्नाः...मैः सुपूजिताः । तथा जानपदं चैव कर्तव्यं बहु भोजनं ॥ ११ ॥ दातव्यमन्नं विविधं सत्कृतं न तु पीडया । सर्वे...त्कृताः ॥ १२ ॥ नावमानः प्रयोक्तव्यः...धकृतः कचित् । यज्ञ...स्तथा ॥ १३ ॥ तेषा...क्रमं । यथा सर्वं...हीयते ॥ १४ ॥ तथा भवंतः...प्रीतिस्निग्धेन चेतसा । ततः...गत्य...ब्रुवन् ॥ १५ ॥ यथोक्तं...स्यते । ततः सुमंत्र...ब्रवीत् ॥ १६ ॥ निमंत्र...धार्म्मिकान् । ब्राह्म...सहस्रशः ॥ १७ ॥ समानय...मानवान् । मिथिला...जनकं दृढविक्रमं ॥ १८ ॥ निश्चितं सर्वशास्त्रेषु तथा वेदेषु निष्ठितं । तमानय...गं भूपमेनं सु...तं ॥ १९ ॥ पूर्वं शांतध्वजं ज्ञात्वा ततो वाक्यं ब्रवीमि ते । तथा...वादिनं ॥ २० ॥ वयस्यं राजसिंहस्य तमानय यशस्विनं । तथा केकय...धार्म्मिकं ॥ २१ ॥ श्वशुरं...हानय । अंगेश्वरं तथा स्निग्धं लोम...कृतं ॥ २२ ॥ सुव्रतं देवसंकाशं स्वयमेव त्वमानय । प्राच्यां च सिंधु...शूंश्चान्य पा...न ॥ २३ ॥ दाक्षि...श्च सर्वानानय मा चिरं । अतिस्निग्धा

